महाताण्डवं चेति तत्र नटन्तं नटाकारानुकरिणं नृत्यन्तमिति वा। ताण्डवं तु उद्धतप्रयोगप्रधानत्वात् प्रायेण पुरुषकर्तृकं भवति। तदुक्तं— ''तदुक्तमुद्धतप्रायप्रयोगं ताण्डवं मतम्।'' तत्तु सर्वेषां रसानामभिव्यक्तिकारणं भवतीति नवरसम्। किंलक्षणमया समयया, लास्यपरया। लास्यं नृत्यविशेषं कुर्वन्त्या। लास्यं नाम सुकुमारांगं, यत् चतुर्विधाभिनयोपेतं नृत्यं, तत्प्रायेण स्त्रीकर्तृकमेव भवति। तदुक्तं ''लास्यं तु सुकुमारांगं मकरध्वजवर्धनम्''। तत्परया तत्कुर्वाणया। उभाभ्यां नटनटीरूपाभ्यां स्वात्मानं मातापितृमन्तं मेने। यथा पितृभ्यां जननपालनपोषणादिना पोष्यमाणाः पुत्रादयः सुखेन क्रीडन्ति तद्वदिति। किंलक्षणाभ्यां जगदुदयविधिमुद्दिश्य जगदुदयानन्दं प्राप्त पितृभ्यां यथा पुत्रो जायते, आनन्देन पितरौ नृत्यतः, तथा चिरविनष्टं जगदुत्पन्नमित्यानन्दः, तेन नृत्यद्भ्यां, जगदुदयविधिमुद्दिश्य तव दयया सनाथाभ्यां सहकृताभ्यां सस्वामिकाभ्यां वा। महासंहारे जगति विनष्टे सति एतौ दुःखितौ भवत इति जगदुदयेन सुखिनौ भवेतामित्यनया तयोरुपरि दया जाता। परदुःखं दृष्ट्वा दुःखितस्य कारूणिकस्य तन्निदानच्छेदे तृष्णा भवतीति त्वद्दयापात्राभ्याम्। अथवा इदं जगच्चिरविनष्टं, पुनःकथमुत्पाद्यमिति शोकाकुलहृदयाभ्याम्। अस्मिन्पक्षे तव पदे न लगति। तदा परमेश्वर्या एव पञ्चभूतात्मकं षडाग्नायावच्छिन्नं शरीरं प्रकल्पितमेभ्यः मूलाधाराभिप्रायेण तवेति योजनीयम्। अत्र नवधा रस्यते, तेन नव तालाः, तैर्युक्तस्य महाताण्डवस्य नटं इत्यादिकं तु प्रमाणरहितत्वादुपेक्षणीयम्। अत्र नवाक्षरीविद्या श्रीशंकरस्वामिना गोपितास्ति, गुरुमुखादवगन्तव्या। तव स्वाधिष्ठान इत्यादि श्लोकत्रयेण मिथुनत्रयस्मरणेन, मिथुनत्रयमन्त्रस्य स्मरणं कर्तव्यं साधकैः इति शंकराचार्याणां हृदयं, मन्त्राक्षरबाहुल्यात्। एतत्त्रयस्मरणेन, मन्त्रजिज्ञासा भविष्यतीति भावः। एतावता ग्रन्थेन मन्त्रभागो विचारितः। इत आरभ्य परमेश्वर्याः श्रृंगारं वर्णयति।। इति आनन्दबारकृत्स्नश्रीशङ्कराचार्यस्याज्ञया श्रीआनन्दगिरिविरचितिसौन्दर्यलहर्यां मन्त्रोत्द्धारः।।४१।।

## तात्पर्यदीपिनी

अथाधारचक्रं निरूपयति-तवेति। हेमातः अहमाधारे मूले आधारचक्रस्य मूले भवात्मानं भवस्य आत्मानं सदाशिवं समयया सह वन्दे नमस्करोमि। कथंभूतया समयया। लास्यपरया लास्ये परा तया, नृत्यपरया। किंविधं भवात्मानं, नवरसमहाताण्डवनटं, नवो रसो यस्मिन्, एतादृशे ताण्डवे नटं, तथा सुकुमारीभिः स्त्रीभिर्नृत्यन्तं, अतः कारणादेताभ्यां उभाभ्यां शिवशक्तिभ्यां इदं जगत् जनकजननीमत् जज्ञे। किंविधाभ्यां उभयविधिमुद्दिश्य भगवत्या दयया सनाथाभ्यां, तयोस्तत्रैव कृपातरंगो बलवानभूदित्यर्थः। एवंरूपं षट्पञ्चाशच्छक्तियुक्तं आधारचक्रं निरूपितं भवति।।४१।।

## पदार्थचन्द्रिका

अथ षष्ठचक्रस्थं पार्वतीसहितं श्रीमहादेवं स्तौति। तवाधार इति। हे जननि, भवात्मानं भवदेहं समयया कालशक्त्या सह वन्दे। लास्यमत्र जगन्निर्माणमेव। यद्वा लास्यपरया समयवा शुभावहविधियुक्तया

महाताण्डवं चेति तत्र नटन्तं नटाकारानुकरिणं नृत्यन्तमिति वा। ताण्डवं तु उद्धतप्रयोगप्रधानत्वात् प्रायेण पुरुषकर्तृकं भवति। तदुक्तं— ''तदुक्तमुद्धतप्रायप्रयोगं ताण्डवं मतम्।'' तत्तु सर्वेषां रसानामभिव्यक्तिकारणं भवतीति नवरसम्। किंलक्षणमया समयया, लास्यपरया। लास्यं नृत्यविशेषं कुर्वन्त्या। लास्यं नाम सुकुमारांगं, यत् चतुर्विधाभिनयोपेतं नृत्यं, तत्प्रायेण स्त्रीकर्तृकमेव भवति। तदुक्तं ''लास्यं तु सुकुमारांगं मकरध्वजवर्धनम्''। तत्परया तत्कुर्वाणया। उभाभ्यां नटनटीरूपाभ्यां स्वात्मानं मातापितृमन्तं मेने। यथा पितृभ्यां जननपालनपोषणादिना पोष्यमाणाः पुत्रादयः सुखेन क्रीडन्ति तद्वदिति। किंलक्षणाभ्यां जगदुदयविधिमुद्दिश्य जगदुदयानन्दं प्राप्त पितृभ्यां यथा पुत्रो जायते, आनन्देन पितरौ नृत्यतः, तथा चिरविनष्टं जगदुत्पन्नमित्यानन्दः, तेन नृत्यद्भ्यां, जगदुदयविधिमुद्दिश्य तव दयया सनाथाभ्यां सहकृताभ्यां सस्वामिकाभ्यां वा। महासंहारे जगति विनष्टे सति एतौ दुःखितौ भवत इति जगदुदयेन सुखिनौ भवेतामित्यनया तयोरुपरि दया जाता। परदुःखं दृष्ट्वा दुःखितस्य कारूणिकस्य तन्निदानच्छेदे तृष्णा भवतीति त्वद्दयापात्राभ्याम्। अथवा इदं जगच्चिरविनष्टं, पुनःकथमुत्पाद्यमिति शोकाकुलहृदयाभ्याम्। अस्मिन्पक्षे तव पदे न लगति। तदा परमेश्वर्या एव पञ्चभूतात्मकं षडाग्नायावच्छिन्नं शरीरं प्रकल्पितमेभ्यः मूलाधाराभिप्रायेण तवेति योजनीयम्। अत्र नवधा रस्यते, तेन नव तालाः, तैर्युक्तस्य महाताण्डवस्य नटं इत्यादिकं तु प्रमाणरहितत्वादुपेक्षणीयम्। अत्र नवाक्षरीविद्या श्रीशंकरस्वामिना गोपितास्ति, गुरुमुखादवगन्तव्या। तव स्वाधिष्ठान इत्यादि श्लोकत्रयेण मिथुनत्रयस्मरणेन, मिथुनत्रयमन्त्रस्य स्मरणं कर्तव्यं साधकैः इति शंकराचार्याणां हृदयं, मन्त्राक्षरबाहुल्यात्। एतत्त्रयस्मरणेन, मन्त्रजिज्ञासा भविष्यतीति भावः। एतावता ग्रन्थेन मन्त्रभागो विचारितः। इत आरभ्य परमेश्वर्याः श्रृंगारं वर्णयति।। इति आनन्दबारकृत्स्नश्रीशङ्कराचार्यस्याज्ञया श्रीआनन्दगिरिविरचितिसौन्दर्यलहर्यां मन्त्रोत्द्धारः।।४१।।

### तात्पर्यदीपिनी

अथाधारचक्रं निरूपयति-तवेति। हेमातः अहमाधारे मूले आधारचक्रस्य मूले भवात्मानं भवस्य आत्मानं सदाशिवं समयया सह वन्दे नमस्करोमि। कथंभूतया समयया। लास्यपरया लास्ये परा तया, नृत्यपरया। किंविधं भवात्मानं, नवरसमहाताण्डवनटं, नवो रसो यस्मिन्, एतादृशे ताण्डवे नटं, तथा सुकुमारीभिः स्त्रीभिर्नृत्यन्तं, अतः कारणादेताभ्यां उभाभ्यां शिवशक्तिभ्यां इदं जगत् जनकजननीमत् जज्ञे। किंविधाभ्यां उभयविधिमुद्दिश्य भगवत्या दयया सनाथाभ्यां, तयोस्तत्रैव कृपातरंगो बलवानभूदित्यर्थः। एवंरूपं षट्पञ्चाशच्छक्तियुक्तं आधारचक्रं निरूपितं भवति।।४१।।

### पदार्थचन्द्रिका

*अथ षष्ठचक्रस्थं* पार्वतीसहितं श्रीमहादेवं स्तौति। तवाधार इति। हे जननि, भवात्मानं भवदेहं *समयया कालशक्त्या सह वन्दे*। लास्यमत्र जगन्निर्माणमेव। यद्वा लास्यपरया समयवा शुभावहविधियुक्तया

इति श्रीपदवाक्यप्रमाणज्ञातिरात्रयाजिमहाभट्टारकारविन्दलोचनाचार्यपुत्रश्रीरामकविडिण्डिम-मुकुटरायमहापात्रराशौ आनन्दलहरीभाष्यालोचने प्रथममुन्मीलनं सम्पूर्णम्।।

## गोपालसुन्दरी

क्रमप्रप्तौ पार्थिवरश्मिमुख्यौ देवदेव्यौ आह-तवाधार इति। तव त्वदधिष्ठिते मूले आधारे चतुर्दलमूलाधारचक्रे लास्यं शृङ्गाररसोचितनृत्यन्तं तत्परया समयया समयाख्यशक्त्या सह नवात्मानं नवकूटमहाविद्यात्मकं यद्वा पूर्वोक्तनवव्यूहरूपं नवखण्डनालात्मकं वा वस्तुतो नवरसरूपम्। 'रसो व सः' इति श्रुतेः। नवरसा अभिनेया यत्र तादृशं यन्महाताण्डवनृत्यविशेषं तस्य 'नटनाबिनायकं वन्दे'। मन्ये इत्यपि पाठः। एताम्यामुभाम्यां नटेश्वरीनटेश्वराभ्यामिदं जगत् जनकजननीमत् मातापितृयुक्तं जज्ञे जातम्। कीदृशाभ्यां? उदयविधिमुद्दिश्य दयया सनाथाभ्यां महासंहारानन्तरं जगदुत्पत्तिमनुसन्धाय दयया सनाथाभ्यां युक्ताभ्यामित्यर्थः, सिसृक्षोन्मीलितानुग्रहेण यथापूर्वं जगदुत्पन्नं विलोक्य सन्तोषेण लास्यताण्डवसमुत्सुकाभ्यां देवदेवीभ्यां जगदिदं मातापितृमज्जातं। मातापितरावपि पुत्रे जाते सन्तोषातिशयेन नृत्यत इति भावः। उभयविधमिति पाठे उभयप्रकारं स्थावरजङ्गमात्मकं चेतना चेतनात्मकं स्थूलसूक्ष्मात्मकं वा जगदुद्दिश्य या दया युक्ताभ्यामित्यर्थः। विष्णुपक्षेपि समानम्।।४१।।

इति श्रीमहाभागवतश्रीनरसिह्मस्वामिकृतं शक्तिविष्णुपरकं श्रीसौन्दर्यलहरीभाष्ये पूर्वो भागः।।

## आनन्दलहरीटीका

तवेति। तवाधिष्ठानभूते मूले आधारे मूलाधारचक्रे समयया समयानाम्न्या शक्त्या सह, कीदृशा लास्यपरया नृत्यासक्तया, नव रसाः शृंगारादयो यत्र, तादृशे महाताण्डवे नृत्यविशेषे नट नर्तकं वन्दे। नव रसा तालाः। रसपदस्यात्र तालपरत्वमिति कश्चित्। मन्ये इति पाठे आराध्यताबुद्धिविषयीकरोमीत्यर्थः। कीदृशं नवात्मानं नवव्यूहात्मकभैरवस्वरूपं, नव व्यूहाश्च पूर्वं दर्शिताः। नवरसरूपं वा। 'रसो वै सः' इति श्रृतेः। नवकूटमहाविद्यात्मकमिति कश्चित्। एताभ्या मुपाभ्यां समयानवनटाभ्यां इदं जगत् जनकजननीमत् मातापितृयुक्तं जज्ञे जातम्। कीदृशाभ्यां, उदयविधिः उत्पत्तिविधानं, अर्थाज्जगत एव, उद्दिश्य स्थिताभ्यामिति शेषः। तेन क्त्वाप्रत्ययस्य स्थितिक्रियया सह समानकर्तृकत्वमक्षतम्। मत्रसूचिमनाराध्येत्यादिवत्। दयया निरुपधिपरदुःखप्रहाणेच्छया

## सौन्दर्यलहरी

सनाथाभ्यां युक्ताभ्यां अन्यावपि माता तरौ अपत्योत्पत्ताविव सदयौ हर्षान्नृत्यत इति भावः। उदयेत्यत्रोभयेति पाठे उभयं सृष्टिस्थितिरूपं बोध्यम्।।४१।।

इति श्रीगौडीयराढान्वयसच्छोत्रियवंशजगौरीकान्तसार्यभौमभट्टाचार्यविरचिता आनन्दलहरी-नामटीकायां पूर्वो भागः।।

## सौन्दर्यलहर्यामानन्दलहर्याख्यप्रथमभागस्थश्लोकानामनुक्रमणिका।।

### (प्रथमतः श्लोकसंख्या, अनन्तरं पृष्ठसंख्या)



**।।श्रीसौन्दर्यलहर्या आनन्दलहर्याख्यः प्रथमो भागः समाप्तः।।**

श्री विद्यामहाणवः समाप्तः

"जगत्कृस्नम् वासुदेमयम्"

शुभमस्तु

"Parirakhniya Parivedika paramarthika"

# SRI VIDYA MAHARNAWAHA

## CHINTHAMANI

*(Special Super Deluxe Illustrated Edition)*

Volume -3



SRI VIDYA VIMARSHNA PEETAM
VARANASI • CHENNAI • HYDERABAD • BANGALORE

SRI VISHALAKSHIYAMBA
SRI CHIDHANANDA NATHA LAHARI

SRI VIDYA VIMARSHNA PEETAM
VARANASI • CHENNAI • HYDERABAD • BANGALORE

SRI VIDYA MAHARNAWAHA

3